नन्वात्माऽपि परमात्मनः [१]कार्यं ततो युक्तस्तस्य संसार इति। न। असंसारिण एव प्रवेशश्रुतेः। "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्याकाशादिकारणस्य ह्यसंसारिण एव परमात्मनः कार्येऽनुप्रवेशः श्रूयते। तस्मात्कार्यानुप्रविष्टो [२]जीव आत्मा पर एवासंसारी। सृष्ट्वाऽनुप्राविशदिति समानकर्तृ (क) त्वोपपत्तेश्च। सर्गप्रवेशक्रिययोश्चैकश्चेत्कर्ता ततः क्त्वाप्रत्ययो युक्तः। प्रविष्टस्य तु [३]भावान्तरापत्तिरिति चेत्। न। प्रवेशस्या[४]न्यार्थत्वेन प्रत्याख्यातत्वात्। "अनेन जीवेने"ति (छा.उ. ६-३-२) [५]विशेषश्रुतेर्धर्मान्तरेणानुप्रवेश इति चेत्। न।

---

एवं मन्दाधिकारिगोचरमुपासनजातमध्यारोपावस्थायामुपदिश्या[६]पवाददृष्टिमभिप्रेत्याऽऽह — प्राणो वा अन्नमित्यादिना।

भोक्तृत्वादिलक्षणः संसारः कार्यगोचर इति वदतैव जीवस्यादनौपाधिकं संसारित्वमिष्टं तस्यापि कार्यत्वादिति [७]भागवतानां मतमुद्भाव्य दूषयति — नन्वात्माऽपीत्यादिना। छान्दोग्यश्रुत्यनुसारेण विकारात्मना प्रवेशमाशङ्क्य वाक्यशेषविरोधमाह - अनेन जीवेनेत्यादिना। भ्रान्त्या देहादिभावमापन्नस्य ब्रह्मव्यतिरिक्तस्यैव ब्रह्मदृष्टिरुपदिश्यते संसारित्वापोहार्था। मातृबुद्धिरिव परयोषिति [८]रागापोहार्था।

---

हैं, वे मर जाते हैं, अर्थात् प्राण छोड़ बैठते हैं और जो उसके अप्रिय शत्रु द्वेष नहीं भी करते हैं, वे भी मर जाते हैं।

'प्राणो वा अन्नं शरीरमन्नादम्' आकाश पर्यन्त कार्य जगत् को ही अन्न और अन्न का भोक्ता कहा गया है। कहा तो है पर इससे लाभ क्या हुआ? इससे यह सिद्ध होता है कि भोज्य और भोक्तृत्व कृत संसार कार्य जगत् में ही है, आत्मा में नहीं। आत्मा में तो भ्रम से औपचारिक रूप से प्रतीत होता है।

जब जीवात्मा भी परमात्मा का कार्य है तो उस जीवात्मा में संसार धर्म का रहना उचित ही है। ऐसा कहना ठीक नहीं; असंसारी चेतन तत्त्व का ही प्रवेश सुना जाता है ' 'तत्सृष्ट्वा तदेवानुप्राविशत्" यहाँ पर आकाशादि प्रपञ्च के कारण असंसारी परमात्मा का ही कार्य में अनुप्रवेश सुना जाता है। अतः "सृष्ट्वानुप्राविशत्" इस वाक्य में सर्ग और उसमें प्रवेश क्रिया का कर्ता यदि एक हो तभी क्त्वा प्रत्यय का प्रयोग करना उचित होगा। "समानकर्तृकयोः पूर्वकाले" इस पाणिनीय सूत्र से सर्ग और प्रवेश क्रिया में एककर्तृकत्व सिद्ध होता है। यदि कहो कि प्रविष्ट हुए की पदार्थान्तरापत्ति हो जाती है तो ऐसा कहना ठीक नहीं; प्रवेश बतलाने वाले श्रुति वाक्य का प्रयोजन कुछ भिन्न ही है,

---

१. कार्यमिति — यतो वा इमानि भूतानि जायन्ते। यथा सुदीप्तात्पावकात्। सर्व आत्मानो व्युच्चरन्तीत्यादिवचनेभ्य इति भावः। २. जीव आत्मा पर एवेति — तथा च कार्यत्वव्यवहारस्तत्र तत्रौपाधिक एवेति भावः। ३. भावान्तरेति — तत्त्वतः संसारिरूपान्तरेत्यर्थः। ४. अन्यार्थत्वेनेति एतच्च ११३ इति पृष्ठे भाष्ये द्रष्टव्यम्। ५. विशेषेति — जीवेनेति विशेषश्रुतेरेव बलवत्त्वात्तदेवानुप्राविशदिति सर्वनाम्ना सामान्यश्रुतेस्तदनुगुणत्वेनैव नेतव्यत्वादिति भावः। ६.अपवाददृष्टिमिति — उत्तमाधिकार्युपयोगिनीमिति भावः। ७. भागवतानां वैष्णवानामित्यर्थः। ८. रागापोहार्थेति — रागो भोगाभिलाषः।

"तत्त्वमसी"ति (छा.उ. ६-८-७) पुनस्तद्भावोक्तेः। भावान्तरापन्नस्यैव तदपोहार्था [1]संपदिति चेत्। न। "तत्सत्यं स आत्मा तत्त्वमसी"ति (छा.उ. ६-८-७) सामानाधिकरण्यात्। दृष्टं जीवस्य संसारित्वमिति चेत्। न। [2]उपलब्धुरनुपलभ्यत्वात्। संसारधर्मैविशिष्ट आत्मोपलभ्यत इति चेत्। न। धर्माणां धर्मिणोऽव्यतिरेकात्कर्मत्वानुपपत्तेः उष्णप्रकाशयोर्दाह्यप्रकाश्यत्वानुपपत्तिवत्त्रासादिदर्शनाद्दुःखित्वाद्यनुमीयत इति चेत्। न। त्रासादेर्दुःखस्य

---

अतस्तत्त्वमसीत्युपदेशस्यान्यार्थत्वान्न जीवस्य पारमार्थिकमसंसारिब्रह्मात्मत्वमित्याशङ्क्य तद्दूषयति-भावान्तरापन्नस्येत्यादिना। [3]अबाधिततत्पद[4]मुख्यसामानाधिकरण्यविरोधादब्रह्मणि जीवे ब्रह्मत्वसंपादनार्थत्वं कल्पयितुं न शक्यत इत्यर्थः। संसारित्वग्राहकप्रत्यक्षविरोधादबाधितत्वमसिद्धमित्याह-दृष्टमिति। सर्वप्रमाणानामनुग्राहकस्तर्क इष्यते। आत्मनश्च संसारधर्मवत्त्वस्य तर्कापरिशुद्धत्वात्तत्प्रत्यक्षस्य भ्रान्तत्वान्न शास्त्रज्ञानबाधकत्वं संभवतीत्याह — नेति। सुखादेरुपलभ्यत्वान्नोपलब्धृधर्मत्वं संभवति रूपादिवदित्यर्थः। संसारित्वग्राहकं यद्यपि प्रत्यक्षप्रमाणं न भवति तथाऽपि संसारधर्मविशिष्ट आत्मा स्वचैतन्येनोपलभ्यत इति स्वानुभवविरोधान्न शाब्दमसंसारित्वज्ञानं प्रमाणमिति चेन्नैतदपि युक्तं कर्मत्वकर्तृत्वविरोधादित्यर्थः। प्रत्यक्षविरोधाभावेऽप्यनुमानविरोधो भविष्यतीत्याह — त्रासादीति। त्रासादि साश्रयं कार्यत्वाद्घटवदन्यस्याऽऽश्रयस्यासंभवादात्मैव तदाश्रयो[5]ऽनुमीयत इति न वाच्यमुपलभ्यो नोपलब्धुर्धर्मो रूपादिवदिति व्याप्यन्तरविरोधाद[6]ध्यासादपि कार्यदर्शनसंभवा-

---

ऐसा कहकर हमने आपके इस पूर्वोक्त पक्ष का खण्डन कर दिया। "अनेन जीवेन" ऐसी विशेष श्रुति से धर्मान्तर रूप से परमात्मा का अनुप्रवेश माना जाय तो? ऐसा कहना भी ठीक नहीं क्योंकि "तत्त्वमसि" इत्यादि श्रुति वाक्य से ब्रह्मभावापत्ति कही गयी है, अन्य भाव को प्राप्त हुए जीव के भावान्तरापन्न को हटाने के लिये ही तदभावापत्ति कही गयी है, ऐसा यदि माना जाय तो? ऐसा कहना ठीक नहीं क्योंकि 'तत्सत्यं स आत्मा तत्त्वमसि' इत्यादि स्थलों में जीव ब्रह्म की एकता बोधक महावाक्य में सामानाधिकरण्य सुना जाता है। यदि कहो कि जीवात्मा में संसारित्व दीखता ही है तो ऐसा कहना ठीक नहीं क्योंकि जीव में संसारित्व देखने वाला उपलब्ध नहीं होता है। संसार धर्म विशिष्ट

---

१. संपदिति — संपदुपास्तिरित्यर्थः। वस्तुतोऽन्यस्य सतोऽन्यात्मना संपादनं ध्यानबलात्। २. उपलब्धुः संसारधर्मवत्तया प्रमाणागोचरत्वादित्यर्थः। ३. अबाधितेत्यादि — अबाधितत्वादेव मुख्यं यत् तत्पदसामानाधिकरण्यं तद्विरोधात्तस्य संपत्तावनुपपन्नत्वादित्यर्थः। न हि "उषा वा अश्वस्य मेध्यस्य शिर" इत्यादिसंपत्तौ मुख्यं पदसामानाधिकरण्यं भवति बाधितत्वादिह तु नवकृत्व उक्तेरबाधितं तन्मुख्यमेवेति भावः। ४ मुख्यसामानाधिकरण्येति — सोऽयमित्यादाविवैक्यविषयकसामानाधिकरण्येत्यर्थः। चतुर्धा हि पदसामानाधिकरण्यं यथाहुः — "बाधाध्यासविशेषणैक्यविषयं नाम्नोश्चतुर्धा मतं सामानाधिकरण्यमाद्यमिह न व्यर्थोद्यमा स्याच्छ्रुतिः। ध्यानाद्यश्रवणादनित्यफलतादोषाच्च नाध्यासधीस्तादात्म्यं न विरुद्धयोरिति बलाद्वस्त्वैक्यपक्षस्थिति"रिति। स्वा० सि० २ प्र० ३८ श्लो०। ५. अनुमीयत इति — इदमत्र परिशेषानुमानं त्रासाद्यात्माश्रयम् आत्मातिरिक्तानाश्रयत्वे सति साश्रयत्वात्। आकाशातिरिक्तानाश्रयत्वे सति साश्रयत्वेनाकाशाश्रितशब्दवदिति। सामान्यमुखे वात्र व्याप्तिर्द्रष्टव्या। ६. सत्प्रतिपक्षस्थले उभयोरेव प्रतिबद्धत्वसाम्यमाशङ्क्याऽऽह — अध्यासादपीत्यादि। अनुकूलतर्कविरहात्पूर्वस्यैवाप्रयोजकत्वमिति भावः। अनुकूलतर्कविरहादिति। आत्मातिरिक्तानाश्रितत्वानभ्युपगमे दोषस्य परेण वक्तुमशक्यत्वादिति भावः।

## एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मान-

जो इस प्रकार जानने वाला है वह इस दृष्टादृष्टलोक से निवृत्त होकर इस अन्नमय आत्मा को

---

चोपलभ्यमानत्वान्नोपलब्धृधर्मत्वम्। कापिलकाणादादितर्कशास्त्रविरोध इति चेत्। न। तेषां मूलाभावे[1] वेदविरोधे च भ्रान्तत्वोपपत्तेः। श्रुत्युपपत्तिभ्यां च सिद्धमात्मनोऽसंसारित्वमेकत्वाच्च।

कथमेकत्वमित्युच्यते —

स यश्चायं पुरुषे यश्चासावादित्ये स एक इत्येवमादि पूर्ववत्सर्वम्। अन्नमयादि-

---

दित्यर्थः। जीवस्य ब्रह्मात्मत्वं प्रतिपादयतः शास्त्रस्य तर्कशास्त्रविरोधादप्रामाण्यमाशङ्क्य दूषयति — कापिलेत्यादिना। [2]तर्कशास्त्रस्य श्रुतेश्च विरुद्धाव्यभिचारित्वेन प्रामाण्यसंशयोऽपि नाऽऽशङ्कनीय इत्याह — श्रुत्युपपत्तिभ्यां चेति। किंच तार्किकेणापीश्वराधीनं जीवस्य सुखित्वं दुःखित्वं च निरूपणीयं न तन्निरूपयितुं शक्यते। स्वात्मनीश्वरस्य सुखदुःखहेतुत्वासंभवादित्यभिप्रेत्याऽऽह — एकत्वाच्चेति।

---

आत्मा तो उपलब्ध होता ही है; ऐसा कहना भी ठीक नहीं। अधर्म को धर्मी से अभिन्न मानने पर अधर्म में कर्मत्व सिद्ध नहीं होगा। जैसे उष्ण में दाह्यत्व नहीं और प्रकाश में प्रकाश्यत्व नहीं सिद्ध होता, वैसे ही त्रासादि देखने से दुःखित्वादि का अनुमान होता, है ऐसा माना जाय तो? ऐसा कहना ठीक नहीं क्योंकि त्रासादि और दुःख में उपलभ्यमानत्व रहने के कारण वे उपलब्धा के धर्म नहीं हैं। यदि कहो कि अद्वैत सिद्धान्त में कपिल-कणाद के तर्क शास्त्र से विरोध आता है तो ऐसा कहना भी ठीक नहीं, उन शास्त्रों में मौलिकता न होने के कारण और वेद के साथ विरोध होने के कारण भ्रान्तत्व सिद्ध होता है। दूसरी ओर श्रुति और युक्ति से आत्मा में असंसारित्व सिद्ध होता है। साथ ही एक होने के कारण ही आत्मा में संसारित्व नहीं है।

एकत्व किस प्रकार है? इस पर कहते हैं—

---

१. ननु मूलाभावोऽसिद्धिः "अजामेकामि"त्यादिवेदस्यैव मूलत्वात्। प्रत्यक्षमूलानुपलम्भे तु स्मृत्या मूलवेदानुमानाच्चेत्याशङ्क्याऽऽह — वेदविरोधे चेति। अजामित्यादिवेदस्य कापिलाभिमतविरुद्धार्थकत्वस्य निर्णयेन तन्मूलत्वासंभवात् प्रत्यक्षवेदविरोधे च मूलानुमानानुपपत्तेर्मैवमित्यर्थः। यद्वा मूलाभावेऽपि शिष्टाचारवदेव स्मृतेः स्वतः प्रामाण्यं किं न स्यादित्याशङ्क्याऽऽह — वेदविरोधे चेति। तथा च प्रत्यक्षवेदविरोधाभावे सत्येव निर्मूलस्यापि शिष्टाचारवत्संभवति प्रामाण्यम्। इह तु प्रत्यक्षवेदविरोधादेव न तदुपपद्यत इति भावः। २. भ्रान्तप्रत्ययेनाप्रमात्वनिश्चयाभावेऽपि प्रमात्वसंशय एवास्तु तथादर्शनादित्याशङ्क्याऽऽह — तर्कशास्त्रस्येत्यादि। तर्कशास्त्रस्वश्रुतेश्च परस्परं विरुद्धत्वस्य नियतत्वेनेत्यर्थः। तर्कशास्त्रे श्रुतिविरुद्धत्वनिश्चयेन भ्रान्तिमूलकत्वावधारणान्न तत्र प्रामाण्यसंशयः संभवतीति भावः। इति प्राञ्चः। तर्कशास्त्रस्य विरुद्धत्वेन श्रुतेश्चाव्यभिचारित्वेनेत्यर्थः। तर्कशास्त्रं स्वप्रतिपाद्यसंसारित्वाभावेन व्याप्त यत्राऽऽत्मनि प्रतिपादकत्वेन तद्वर्तते तत्र संसारित्वाभावादिति तद्विरुद्धं श्रुतिश्चाव्यभिचारिणी स्वप्रतिपाद्यासंसारित्वाभाववदवृत्तित्वात्। तथा च विरुद्धेन अव्यभिचारिणि प्रामाण्यसंशयो नोपपद्यत एव। न हि शब्दो नित्यः कृतकत्वादित्यनेन शब्दोऽनित्यः कार्यत्वादित्यत्र प्रामाण्यसंशयो युज्यत इति भावः। वस्तुतस्तु विरुद्धेनाव्यभिचारित्वेनेत्येव विग्रहः। न ह्येकस्मिन् विरुद्धयोर्द्वयोरप्यव्यभिचारित्वं यथार्थत्वमविरुद्धं भवति ततश्चैकस्य व्यभिचारित्वावश्यकत्वे तर्कापरिशुद्धत्वेन तर्कशास्त्रस्यैव तथात्वौचित्यान्न तेन व्यभिचारिणाऽव्यभिचारिण्यां श्रुतौ प्रामाण्यसंशयो न्याय्यः। नहि वह्न्यभाववान् पर्वतो द्रव्यत्वादित्यनेन वह्निमान् धूमादित्यत्र प्रामाण्यं संदिह्यत इति भावः।

**मुपसंक्रम्य। एतं प्राणमयमात्मानमुपसंक्रम्य। एतं मनोमयमात्मानमुपसंक्रम्य। एतं विज्ञानमयमात्मानमुपसंक्रम्य। एतमानन्दमयमात्मानमुपसंक्रम्य। इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन्। एतत्साम गायन्नास्ते। हा३वु हा३वु हा३वु (५)।**

प्राप्त कर इस प्राण में आत्मा के प्रति संक्रमण कर, इस मनोमय आत्मा के प्रति संक्रमण कर, इस विज्ञानमय आत्मा को प्राप्त कर तथा इस आनन्दमय आत्मा के प्रति संक्रमण कर इन लोकों में यथेच्छ भोगों को भोगता हुआ इच्छानुसार रूप धारण कर विचरता हुआ इस साम का गान करता है हा३वु, हा३वु, हा३वु।।५।।

---

क्रमेणाऽऽनन्दमयमात्मानमुपसंक्रम्यैतत्साम गायन्नास्ते। सत्यं ज्ञानमित्[1]यस्या ऋचोऽर्थो व्याख्यातो विस्तरेण तद्विवरणभूतयाऽऽनन्दवल्ल्या सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चितेति [2]तस्य फलवचनस्यार्थविस्तारो नोक्तः। के ते [3]किंविषया वा सर्वे कामाः कथं वा ब्रह्मणा सह समश्नुत इत्येतद्वक्तव्यमितीदमिदानीमारभ्यते। [4]तत्र पितापुत्राख्यायिकायां पूर्वविद्याशेषभूतायां तपो ब्रह्मविद्यासाधनमुक्तम्। प्राणादेराकाशान्तस्य च

---

स य इत्यादिपदव्याख्यानमुपेक्ष्यो[5]पसंक्रमणसामगानयोरेककर्तृ(क)त्वमन्वयप्रदर्शनेन दर्शित-[6]मिदानीं वल्लीसमाप्तिपर्यन्तस्य ग्रन्थस्य तात्पर्यं वृत्तकीर्तनेनाऽऽह — सत्यं ज्ञानमित्यादिना। अविद्या-

---

### आदित्य और देह में स्थित चेतन की अभेद उपासना का फल

जो यह पुरुष में है और जो वह आदित्य में है, वह एक ही है इत्यादि सभी बात पहले की भाँति है। अन्नमयादि क्रम से आनन्दमय आत्मा में उपसंक्रमण कर वह ज्ञानी इस साम का गान करता रहता है। 'सत्यं ज्ञानम्' इस ऋचा का अर्थ उसकी व्याख्यारूप आनन्द वल्ली के द्वारा विस्तार से कहा गया है; किन्तु "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" चैतन्य ब्रह्म के साथ ही वह तत्त्वज्ञानी सम्पूर्ण भोगों को प्राप्त कर लेता है उस फल वचन के अर्थ का विस्तार नहीं किया गया। वे

---

१. इत्यस्या ऋच इति — ऋक्पूर्वार्धस्येति यावत्। अन्यथा फलवचनस्य अर्थविस्तारो नोक्त इति वक्ष्यमाणं विरुध्येतेति। २. तस्य — ऋगुक्तब्रह्मवेदनस्येति यावत्। यद्वा इति तस्य इत्यस्येत्यर्थः। तस्य विदुष इति वा। तस्येति अत्र तस्या इत्यपि संभाव्यते पाठस्तदा यथोक्तर्ग्घटकस्येत्यर्थः। ३. किंविषयाः किंनिष्ठाः। ४. किं तत्रेति के ते किं विषया इत्यादिनोक्तेष्वर्थेष्वित्यर्थः। निर्धारणे सप्तमी। एते कामादर्शिता इति संबन्धः।॰ कामदर्शनप्रकारं वक्तुमेव भृगुवल्लीवृत्तं कीर्तयति — पितापुत्रेत्यादिना। ५. उपसंक्रमणसामगानयोरेककर्तृकत्वमन्वयप्रदर्शनेन दर्शितमिति — सामगानं हि विदुषः कृतार्थत्वख्यापन तस्य यथोक्तोपसंक्रमणप्रयुक्तत्वख्यापनार्थमेवान्वयेन तद्दर्शितमिति भावः। अन्यथा ह्युपसंक्रम्य कामान्नी कामरूपी च भवति। तथा च सँल्लोकाननुसंचरति लोकाननुसंचरंश्च साम गायतीत्येवमन्वयस्यापि संभवाद्विवक्षितप्रयोज्यप्रयोजकभावालाभेन वक्ष्यमाणग्रन्थतात्पर्यवचनं नोपपद्येत। तात्पर्यं हि विद्याफलं युगपत्सर्वकामावाप्तिरित्यत्र तस्य च प्रकृतसामगानमेव द्योतकं तच्चेल्लोकानुसंचरणादिप्रयुक्तं तदा यथोक्तोपसंक्रमणात्मकविद्याफलत्वं युगपत्सर्वकामाशनस्य न स्यादिति भावः। ६. तथा चान्वयप्रदर्शनेन तयोरेककर्तृकत्वप्रदर्शनं तात्पर्योक्तावुपयुज्यत इत्यत एव तत्पूर्वं कृतमधुना तात्पर्यमाहेत्याशयवानाह — इदानीमित्यादि।

कार्यस्यान्नान्नादत्वेन [1]विनियोगश्चोक्तः। [2]ब्रह्मविषयोपासनानि च। [3]ये च सर्वे कामाः प्रतिनियतानेकसाधनसाध्या आकाशादिकार्यभेदविषया एते दर्शिताः। [4]एकत्वे पुनः कामकामित्वानुपपत्तिः। भेदजातस्य सर्वस्याऽऽत्मभूतत्वात्। [5]तत्र कथं युगपद्ब्रह्मस्वरूपेण सर्वान्कामानेवंवित्समश्नुत इत्युच्यते। सर्वात्मत्वापत्तेः। कथं सर्वात्मत्वापत्तिरित्याह। पुरुषादित्यस्थात्मैकत्वविज्ञानेनापोह्योत्कर्षापकर्षावन्नमयाद्यात्मनोऽविद्याकल्पितान्क्रमेण [6]संक्रम्याऽऽनन्दमयान्तान्[7]सत्यं ज्ञानमनन्तं ब्रह्मादृश्यादिधर्मकं स्वाभाविकमानन्दमजममृतमभयमद्वैतं फलभूतमापन्न इमाँल्लोकान्भूरादीननुसंचरन्निति व्यवहितेन संबन्धः। कथमनुसंचरन्। कामान्नी कामतोऽन्नमस्येति कामान्नी। तथा कामतो रूपाण्यस्येति कामरूपी। अनुसंचरन्[8]सर्वात्मनेमाँल्लोकाना[9]त्मत्वेनानुभवन्। [10] किम्, एतत्साम गायन्नास्ते। [11]समत्वाद्ब्रह्मैव साम सर्वानन्यरूपं गायञ्शब्दयन्नात्मैकत्वं प्रख्यापयँल्लोकानुग्रहार्थं तद्विज्ञानफलं

---

लेशवशेन द्वैतावभासमनुभवन्विद्वान्सर्वस्याऽऽत्माऽहमिति मन्यमानोऽणिमाद्यैश्वर्यभुजां योगिनां यत्कामान्नत्वं कामरूपत्वं च [12]ममैवेति पश्यन्युगपत्सर्वान्विषयानन्दानश्नुत इत्युपचर्यत इत्याह – सर्वात्मत्वापत्तेरिति।

---

कौन हैं, किंविषयक सब कामनाएँ हैं और वह ब्रह्म के साथ कैसे प्राप्त करता है, यह सब कुछ बतलाना है। इसीलिये यह प्रकरण प्रारम्भ हुआ है। वहाँ पर पूर्व विद्या के अङ्गरूप पिता पुत्र की आख्यायिका में ब्रह्मविद्या का साधन तप ही कहा गया है। प्राण से लेकर आकाश पर्यन्त सम्पूर्ण कार्य जगत् का अन्न और अन्नादत्व रूप में विनियोग बतलाया गया और ब्रह्म विषयक उपासनाएँ भी बतलायी गयी। जो ये सभी कामनाएँ हैं, प्रतिनियत अनेक साधन – साध्य वाले हैं, ये आकाशादि कार्य भेद विषयक ही देखे गये हैं क्योंकि अभेद मानने पर काम और कामित्व की सिद्धि नहीं हो सकती, उस स्थिति में सभी भेद समुदाय आत्म स्वरूप हो चुके हैं। फिर भला एक साथ ब्रह्मस्वरूप से ऐसा ब्रह्मज्ञानी वहाँ पर सम्पूर्ण भोगों को कैसे प्राप्त कर सकता है? इस पर कहते हैं कि वह ब्रह्मज्ञानी सर्वात्मा बन गया है। इसीलिये उसमें उक्त फल प्राप्ति सम्भव है। सर्वात्मत्व की सिद्धि कैसे होती है? इस पर कहते हैं पुरुष और आदित्य में स्थित एक आत्मा के विज्ञान से उत्कर्ष अपकर्ष भाव दूर हो जाते हैं। फिर अविद्या कल्पित अन्नमयादि से लेकर आनन्दमय पर्यन्त आत्मा को क्रमशः संक्रमण कर सत्य, ज्ञान, अनन्त ब्रह्म अदृश्यत्वादि धर्म वाला स्वाभाविक आनन्द, अज, अमृत, अभय अद्वैतरूप फल को प्राप्त हो जाता है। फिर तो सर्वात्मभाव को प्राप्त हुआ वह ज्ञानी भूरादि इन सम्पूर्ण लोकों में विचरण करता हुआ (साम गान करता है) कैसे विचरण करता है? इच्छा से जिसे अन्न प्राप्त हो, उसे

---

१. विनियोग उपयोगः। २. ब्रह्मविषयोपासनानि चोक्तानीति संबन्धः। ३. एतावता किमुक्तं भवति तदाह – ये च सर्वे कामा इत्यादिना। ननु कामानां पूर्वत्रैव दर्शितत्वे इत्येतद्वक्तव्यमितीदमिदानीमारभ्यत इत्युक्तं विरुध्यत इति चेन्न पूर्वत्रस्वरूपतो दर्शितत्वेऽपि त इम इत्यस्येदानीमेव वक्तव्यत्वात्। इमाँल्लोकान् कामान्नी कामरूप्यनुसंचरन्नित्याद्युक्तेरेव तथाविधत्वादिति भावः। ४.मूलं व्याख्यातुं पातनिकां चिकीर्षञ्छङ्कते – एकत्वे पुनरित्यादिना। ५. तथा सति। ६.संक्रम्येति – अधिष्ठानयाथात्म्यज्ञानेनापबाध्येति यावत् ७.संक्रम्येत्युक्तं व्याचष्टे – सत्यमित्यादिना। ८. सर्वात्मनेति – सर्वस्यात्माऽऽहमिति बुद्ध्या देवादिसर्वस्वरूपेणेति यावत्। ९. आत्मत्वेन – आत्मीयत्वेनेति यावत्। १०. किं कुरुत इति शेषः। ११. समत्वादिति। तथा चोक्तं – "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरमि"ति। १२. ममैवेति तदित्यादिः।

अहमन्नमहमन्नमहमन्नम्। अहमन्नादो ऽ ३ हमन्नादो ऽ ३ हमन्नादः। अहꣳ श्लोककृदहꣳ श्लोककृदहꣳश्लोककृत्। अहमस्मि प्रथमजा३ऋता३स्य। पूर्वं देवेभ्यो अमृतस्य ना३भायि। यो मा ददाति स इदेव मा३ऽऽवाः। अहमन्नमन्नमदन्तमा३द्मि। अहं विश्वं भुवनमभ्यभवा३म्। सुवर्न ज्योतीः। य एवं

विशुद्ध होता हुआ भी मैं भोग्य हूँ, मैं अन्न हूँ, मैं अन्न हूँ, मैं ही अन्नाद हूँ, मैं ही अन्न का भोक्ता हूँ, मैं ही अन्नाद हूँ, मैं ही श्लोककृत् (अन्न एवं अन्नाद के संघातकर्ता) हूँ, मैं ही श्लोककृत् हूँ, मैं ही श्लोककृत् हूँ। मैं ही मूर्तामूर्त जगत् के पहले हिरण्यगर्भ से उत्पन्न हुआ हूँ, मैं ही देवताओं से पूर्ववर्ती विराट् एवं अमरत्व का केन्द्र स्थान हूँ। जो अन्नरूप मुझे (अन्नार्थियों को) देता है वह इस प्रकार मेरी रक्षा करता है, किन्तु स्वयं अन्न भक्षण करने वाले को मैं अन्नरूप से भक्षण करता हूँ। मैं इस सम्पूर्ण भुवन का पराभव करता हूँ, हमारी ज्योति सूर्य के समान सदा प्रकाशरूप है, ऐसी यह

---

चातीव कृतार्थत्वं गायन्नास्ते तिष्ठति।

हा३वु हा३वु हा३वु। [1]अहो इत्येतस्मिन्नर्थेऽत्यन्तविस्मयख्यापनार्थम्। कः पुनरसौ विस्मय इत्युच्यते — अद्वैत आत्मा निरञ्जनोऽपि सन्नहमेवान्नमन्नादश्च। किंचाहमेव श्लोककृत्। [2]श्लोको नामान्नान्नादयोः संघातस्तस्य कर्ता [3]चेतनावान्। अन्नस्यैव वा परार्थस्यान्नादार्थस्य सतोऽनेकात्मकस्य पारार्थ्येन हेतुना संघातकृत्। त्रिरुक्तिर्विस्मयत्वख्यापनार्था। अहमस्मि भवामि। प्रथमजाः प्रथमजः प्रथमोत्पन्नः। ऋतस्य सत्यस्य

---

प्रथमजो हिरण्यगर्भोऽप्यहम्। [4]प्लुतिस्तावद्गानार्था। देवेभ्यः स्वव्यष्टिरूपेभ्यः पूर्वं विराड्रूपमेवेत्यर्थः।

---

कामान्नी कहते हैं तथा जिसे यथेच्छरूप प्राप्त होते हों, उसे कामरूपी कहते हैं, अर्थात् सर्वात्मरूप से इन लोकों को आत्मत्वेन अनुभव करता हुआ (सामगान करता है) किस साम का गान करता है? सम होने से वस्तुतः ब्रह्म ही साम है क्योंकि वह सब से अभिन्न है। इस प्रकार आत्म - एकत्व का ख्यापन करता हुआ लोकों पर अनुग्रह करने के लिये ब्रह्म विज्ञान के फल अत्यन्त कृत - कृत्यता का गान करता हुआ स्थित रहता है।

कैसे? 'हा३वु हा३वु हा३वु' अहो इस अर्थ में अत्यन्त आश्चर्य के लिये उक्त साम का प्रयोग किया गया है। फिर वह विस्मय है क्या? इस पर कहते हैं अद्वैत निरञ्जन आत्मा होता हुआ भी मैं ही अन्न और अन्नाद हूँ। इतना ही नहीं बल्कि अन्न और अन्नाद के संघात का कर्ता

---

१. अहो इत्येतस्मिन्नर्थ इति — तथा च हावु इत्येको निपात इत्यवधेयम्। २. मन्त्रकृदित्यर्थे संभवत्यपि तस्यात्रान्नाद-प्रकरणासंगतेः श्लोकृ संघात इति धातुपाठमनुसृत्य व्याचष्टे — श्लोको नामेत्यादिना। ३. चेतनावाञ्जीवः तदधीनत्वात्प्राणशरीराद्यन्नान्नादसंघातस्येति भावः। ४. प्लुतिः — प्रथमज इत्यादिपदेष्वित्यर्थः।

वेद। इत्युपनिषत् (६)।।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि तृतीये भृगुवल्ल्यध्याये
दशमोऽनुवाकः।।१०।।

ब्रह्मविद्या है। जो इसे इस प्रकार जानता है, उसे पूर्वोक्त फल मिलता है।।६।।

---

[१]मूर्तामूर्तस्यास्य जगतो देवेभ्यश्च पूर्वम[२]मृतस्य नाभिरमृतत्वस्य नाभिर्मध्यं मत्संस्थम[३]मृतत्वं प्राणिनामित्यर्थः।

यः कश्चिन्मा मामन्नमन्नार्थिभ्यो ददाति प्रयच्छत्य[४]न्नात्मना ब्रवीति स इदि[५]त्थमेवमविनष्टं [६]यथाभूतमावा अवतीत्यर्थः। यः पुनरन्यो मामदत्त्वाऽर्थिभ्यः काले प्राप्तेऽन्नमत्ति तमन्नमदन्तं भक्ष्यन्तं पुरुषमहमन्नमेव [७]संप्रत्यद्मि भक्षयामि। अत्राऽऽहै[८]वं तर्हि बिभेमि सर्वात्मत्वप्राप्तेर्मोक्षादस्तु संसार एव यतो मुक्तोऽप्यहम[९]न्नभूत [१०]आद्यः स्यामन्नस्यैवं मा भैषीः संव्यवहारविषयत्वात्सर्वकामाशनस्यातीत्यायं संव्यवहारविषयमन्नान्नादादिलक्षणमविद्याकृतं विद्यया ब्रह्मत्वमापन्नो विद्वांस्तस्य नैव द्वितीयं वस्त्वन्तर-

---

आवा इति – [११]लोण्मध्यमपुरुषैकवचनम्। [१२]पौनःपुन्येनेत्येवं मत्वाऽऽख्यातेषु निपात्यत इत्यवतीति

---

चेतनवान् भी मैं ही हूँ। परार्थ अन्न और अन्नादार्थ अनेक आत्मा का पारार्थ्यरूप हेतु से संघात करने वाला मैं ही हूँ। (प्राणियों के कर्म और उसके उचित फल का सम्बन्ध जोड़ने वाला सर्वज्ञ, सर्वशक्तिमान् मायोपाधिक समष्टि चैतन्य ईश्वर और जीव में अभेद मानकर तत्त्वज्ञानी अन्न एवं अन्नाद का संघात कर्ता अपने को कह रहा है) विस्मयत्व ख्यापन के लिये तीन बार उच्चारण किया गया। देवताओं से पूर्व इस मूर्तामूर्त सत्य जगत् से प्रथम उत्पन्न होने के कारण प्रथमज मैं ही हूँ। अमृतत्व की नाभि मैं ही हूँ; अर्थात् प्राणियों का अमृतत्व मुझ में स्थित है।

---

१. स्ववाच्यवाचकविशेषवाच्यत्वेन लक्षितलक्षणया, ऋतशब्दार्थमाह – मूर्तामूर्तस्यास्य जगत इति। २. अमृतस्य नाभिरिति – अनेन नाभिरित्यर्थे नाऽभायीति च्छान्दसमिति सूच्यते। ३. अमृतत्वं मोक्षः स चाहमेव सर्वेषामिति भावः। ४. अन्नात्मना ब्रवीति – विद्वदात्मनाऽन्नार्थिभ्यस्तद्दानासंभवादन्नाभेदेन वदतीत्यर्थः। ५. इत्थं – दानेनैवेत्यर्थः। ६. यथाभूतमवतीति – यथादत्तमुपतिष्ठत इति ह्युक्तमधस्तात्। ७. लडर्थमाह – संप्रतीति। अदत्त्वा भुञ्जानो द्राङ्नश्यतीति भावः। नश्यतीति – प्रत्यवायी भवतीति यावत्। ८. एवं तर्हीति – मुक्तस्यान्नान्नादरूपत्वे सतीत्यर्थः। ९. अहमन्नमिति त्रिरुक्तिमनुसंधायाह – अन्नभूत इति। १०. अहमन्नमदन्तमद्मीत्युक्त्यैवादन्मुक्तस्यान्नं भवति तस्याहमाद्यो भक्ष्यः स्यामन्नरूपत्वान्ममेत्याह–आद्यः स्यामन्नस्येति। ११. लोण्मध्यमेति – तथा च आवा इति प्लुत्यैवोच्चारणवैषम्यम्। विसर्गपाठश्च लेखकप्रमादकृत इति गम्यते। १२. "क्रियासमभिहारे लोड्लोटो हिस्वौ वा च तध्वमो"रिति सूत्रेण पौनःपुन्ये लट्प्रसङ्गे लोट् तस्य च हिरादेश इत्यभिप्रायेणाह – पौनःपुन्येनेत्यादि। अत्र च तथाश्रुतपाठस्यालग्नकतया मूलपाठो भ्रष्ट इत्यवगम्यते। स च पौनःपुन्ये चैतत्सर्वाख्यातेषु निपात्यत इत्येवमादिरूपोऽनुमीयते। तस्य च पौनःपुन्येऽर्थे एतल्लोण्मध्यमपुरुषैकवचनं सर्वाख्यातेषु सर्वलकारेषु सर्वेषां च तिङां स्थाने निपात्यते विधीयते यथोक्तसूत्रेणेत्यर्थः। अत्र च क्रियासमभिहारे द्वे वाच्ये यथाविध्यनुप्रयोगश्चेत्येद्द्वयाभावश्छान्दसोऽन्यथा याहि याहीति यातीतिवद् अवावेत्यवतीति स्यादित्यवधेयम्। यैञ्च टीकाकृता मध्यमपुरुषेत्युक्तं तत्सादृश्याभिप्रायकं द्रष्टव्यम्। हेरादेशस्यात्र सर्वपुरुषसर्ववचनसाधारणत्वादित्यलम्।

मस्ति यतो बिभेत्यतो न भेतव्यं मोक्षात्। एवं तर्हि किमिदमाह — अहमन्नमहमन्नाद इत्युच्यते[१] योऽयमन्नान्नादादिलक्षणः संव्यवहारः कार्यभूतः स संव्यवहारमात्रमेव न परमार्थवस्तु। स[२] एवंभूतोऽपि ब्रह्मनिमित्तो ब्रह्मव्यतिरेकेणासन्निति कृत्वा ब्रह्मविद्या-कार्यस्य ब्रह्मभावस्य स्तुत्यर्थमुच्यते अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नादो-ऽहमन्नाद इत्यादि। अतो भयादिदोष[३]गन्धोऽप्यविद्यानिमित्तोऽविद्योच्छेदाद्ब्रह्मभूतस्य नास्तीत्यहं विश्वं समस्तं भुवनं भूतैः संभजनीयं ब्रह्मादिभिर्भवन्तीति[४] वाऽस्मिन्भूतानीति भुवनमभ्यभवाꣳ[५]मभिभवामि परेणे[६]श्वरेण स्वरूपेण।

सुवर्न ज्योतीः सुवरादित्यो नकार उपमार्थे। आदित्य इव [७]सकृद्विभातमस्मदीयं ज्योतीर्ज्योतिः। प्रकाश इत्यर्थः। इति वल्लीद्वयविहितोपनिषत्परमात्मज्ञानं तामेतां

---

व्याख्यातम्। अभिभवामि, उपसंहरामीत्यर्थः। ईश्वरात्मताज्ञानेनाहंबाधे द्वैतं ततो नास्ति भयकारण-मित्यर्थः।

[८]नकार इवार्थे।।

---

जो कोई अन्नार्थियों के लिये मुझ अन्न को देता है अर्थात् आत्मरूप से कहता है, वह इस प्रकार यथाभूत मुझ अविनाशी की रक्षा करता है और जो कोई दूसरा समय प्राप्त होने पर अन्नार्थियों के लिये मुझ अन्न को न देखकर स्वयं अन्न खाता है, उस अन्न खाने वाले पुरुष को इस समय अन्न बनकर मैं ही खाता हूँ। इस पर कहते हैं कि सर्वात्मभाव की प्राप्तिरूप मोक्ष से मैं डरता ,हूँ। यह तो संसार ही है क्योंकि मुक्त होता हुआ भी अन्नभूत मैं दूसरे का भक्ष्य हो जाऊँगा? इस प्रकार डरो मत सर्वकाम अशन संव्यवहार विषयक है। अविद्याकृत अन्न और अन्नादरूप संव्यवहार विषय का अति-क्रमण कर जब यह विद्वान् ब्रह्मभाव को प्राप्त कर जाता है, तब उसकी दृष्टि में दूसरी वस्तु है ही नहीं, जिससे वह डरे। अतः मोक्ष से भयभीत होने की आवश्यकता नहीं तो फिर इस प्रकार 'अहमन्नमहमन्नादः' ऐसा कहा क्यों? इस पर कहते हैं कि जब यह अन्न नहीं और अन्नाद आदि रूप संव्यवहार कार्य विषयक है, वह संव्यवहार मात्र ही है; परमार्थ वस्तु नहीं है। वह इस प्रकार ब्रह्म निमित्तक ऐसा व्यवहार होता हुआ भी ब्रह्म से भिन्न उसे असत् समझकर ब्रह्मविद्या के फल ब्रह्मभाव की स्तुति के लिये 'अहमन्नम् अहमन्नम् अहमन्नम् अहमन्नादो अहमन्नादो अहमन्नादः' इत्यादि कहा गया है। अतः अविद्या के नष्ट हो जाने से ब्रह्मरूप ब्रह्मज्ञानी को अविद्या निमित्तक भयादि दोष की गन्ध भी नहीं है। मैं सम्पूर्ण भुवन स्वरूप हूँ और ब्रह्मादि सभी भूतों से सम्भजनीय हूँ। जिसमें सभी भूत होते हैं उसको भुवन कहते हैं। परमेश्वर स्वरूप से भुवन का कर्ता भी मैं ही हूँ।

"सुवर्न ज्योतिः" सुवर् शब्द का अर्थ आदित्य होता है और नकार शब्द उपमा अर्थ में है;

---

१. अन्नान्नादादि बाधायामेव सामानाधिकरण्यमित्याशयेनोत्तरमाह — उच्यते योऽयमित्यादिना। २. स व्यवहारः एवंभूतोऽन्नादिलक्षण इत्यर्थः। ३. गन्धो लेशः। ४. इति वा यद्वेत्यर्थे। ५. अभ्यभवाꣳमिति वर्तमाने लङ् छान्दस इत्याशयेन व्याचष्टे — अभिभवामीति। ६. ईश्वरेणेति — ऐश्वरेणेति यावत्। तथैव वा पाठः। ७. सकृद्विभातमुदयास्तमयरहितमिति यावत्। ८. नकार उपमार्थ इत्युक्तं स्पष्टयति — नकार इवार्थ इति।

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।।

ॐ शान्तिः शान्तिः शान्तिः।

इति कृष्णयजुर्वेदीयतैत्तिरीयोपनिषदि तृतीयो भृगुवल्ल्यध्यायःसमाप्तः।।३।।

समाप्तेयं कृष्णयजुर्वेदीया तैत्तिरीयोपनिषत्

---

यथोक्तामुपनिषदं [१]शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा भृगुवत्तपो महदास्थाय य एवं वेद तस्येदं फलं [२]यथोक्तमो[३]मिति।

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवतः कृतौ तैत्तिरीयोपनिषदि तृतीयभृगुवल्ल्यध्यायभाष्ये दशमोऽनुवाकः।।१०।।

(भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व त्रयोदशान्नं प्राणो मनो विज्ञानं द्वादश द्वादशाऽऽनन्दो दशान्नं न निन्द्यादन्नं न परिचक्षीतान्नं बहु कुर्वीतैकादशैकादश) न कंचनैकषष्टिर्दश।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य शंकरभगवतः कृतौ तैत्तिरीयोपनिषद्भाष्ये तृतीयो भृगुवल्ल्यध्यायः।।३।।

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छाकरभाष्यटीकायां तृतीये भृगुवल्ल्यध्याये दशमोऽनुवाकः।।१०।।

तैत्तिरीयकभाष्यस्य शांकरस्य [४]द्रढीयसः।

[५]स्फुटार्थबोधकामेभ्यो निरमायि सुटिप्पणम्।।१।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दभगवत्पूज्यपादशिष्यश्रीमद्भगवदानन्दज्ञानविरचितायां तैत्तिरीयोपनिषच्छांकरभाष्यटीकायां तृतीयो भृगुवल्ल्यध्यायः समाप्तः।।३।।

---

अर्थात् आदित्य के समान मेरी ही ज्योति अन्य सभी ज्योतियों की प्रकाशक है। इस प्रकार वल्लीद्वय द्वारा विहित उपनिषत् अर्थात् परमात्म ज्ञान को बतलाया गया। उसी यथोक्त इस उपनिषत् को शान्त, दान्त, उपरत, तितिक्षु और समाहित होकर भृगु ने महत्तप का आश्रय लेकर जाना था। जो भी कोई परमात्म ज्ञान को इस प्रकार जानता है उसे यह यथोक्त मोक्षरूप फल प्राप्त होता है।।६।।

इस प्रकार तैत्तिरीयोपनिषद् शांकर भाष्य की श्रीमत्परमहंस परिव्राजकाचार्य श्रोत्रिय ब्रह्मनिष्ठ कैलासपीठाधीश्वर परमादर्श आचार्य महामण्डलेश्वर स्वामी विद्यानन्द गिरि विरचित "विद्यानन्दीमिताक्षरा" टीका पूर्ण हुई।।

—❀— श्रीशंकरः प्रीयताम् —❀—

---

१. एवमित्येतद्व्याचष्टे — शान्त इत्यादिना। २. यथोक्तमिति — युगपत्सर्वकामाशनादिरूपमित्यर्थः। ३. मङ्गलेन भाष्यं समापयति — ओमितीति। ४. द्रढीयसोऽभेद्यस्य दुःखगाहस्येति यावत्। ५. स्फुटेति — स्फुटं येऽर्थबोधं कामयन्ते तदर्थमित्यर्थः। अधीत्य गुरुपादेभ्यो विष्णुदेवेन भिक्षुणा। स्वमनःशुद्धये साधु टिप्पणं विनिवेशितम्।।

श्री कैलासपीठाधीश्वर अनन्त श्रीमत्परमहंसपरिव्राजकाचार्य परमादर्श आचार्य महामण्डलेश्वर

# श्रीमत्स्वामी विद्यानन्द गिरि जी महाराज

## एवं श्री कैलास आश्रम के पूर्वाचार्यों की अनुपम कृतियां।

## श्री कैलास विद्या प्रकाशन के सोपान

१. ईशावास्योपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्योपेता) क्राउन साइज ८ पेजी पृष्ठ ६८ ... ३०.००

२. ईशावास्य प्रवचनसुधा, डिमाई साइज पृष्ठ ३२० ... ५०.००

३. ईशावास्य प्रवचनसुधा (आंग्ल अनुवाद) डिमाई १६ पेजी सजिल्द २००.००

४. केनोपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्ययुता) क्राउन साइज पृष्ठ १३८ ५०.००

आई. एस. बी. एन. ८१९००६२५-७-३

५. कठोपनिषद् (सटिप्पणटीकाद्वय संवलित शाङ्करभाष्योपेता) क्राउन साइज पृष्ठ १४० ५०.००

६. प्रश्नोपनिषद् (सटिप्पणटीकाद्वय-समलंकृत शाङ्करभाष्योपेता) क्राउन साइज पृष्ठ १२० ... ४०.००

७. मुण्डकोपनिषद् (सटिप्पणटीकाद्वय-समलंकृत शाङ्करभाष्योपेता) क्राउन साइज पृष्ठ ९० ... ४०.००

८. माण्डूक्य कारिका (सटिप्पण, हिन्दी, संस्कृत टीका सहित शाङ्करभाष्य) सजिल्द क्राउन साइज ८ पेजी पृष्ठ ३२० २५०.००

आई. एस. बी. एन. ८१-९००६२५-८-१

९. माण्डूक्य कारिका (सानुवाद शाङ्करभाष्ययुता) ... ५०.००

१०. तैत्तिरीयोपनिषद् (सटिप्पण-टीकाद्वय संवलित शाङ्करभाष्य) युता) क्राउन साइज पृष्ठ १७८ ... ५०.००

आई.एस.बी.एन. ८१-९००६२५ – ९-X

११. ऐतरेयोपनिषद् (सटिप्पणटीका-द्वय संवलित शांकरभाष्ययुता क्राउन साइज पृष्ठ ११२ ... ४०.००

१२. छान्दोग्योपनिषद् (सटिप्पणटीकाद्वय संवलित शांकरभाष्ययुता) क्राउन साइज पृष्ठ ७३४ ... २००.००

१३. बृहदारण्यकोपनिषद् (सटिप्पण-टीकाद्वय समलङ्कृत शांकरभाष्ययुता) २ खण्ड, पृष्ठ १६६२ ... ५००.००

१४. ईशादि सप्तोपनिषद् (सटिप्पणटीकाद्वय शांकरभाष्योपेता) क्राउन साइज ... २००.००

१५. ईशादि द्वादशोपनिषद् (विद्यानन्दी मिताक्षरा हिन्दी व्याख्या) सजिल्द डबल डिमाई १६ पेजी पृष्ठ ५३२ ... २००.०० (ओडियो, विडियो कैसेट उपलब्ध हैं)

१६. ब्रह्मसूत्र (सानुवाद-विद्यानन्दवृत्ति) सजिल्द डबल डिमाई १६ पृष्ठ ५२०... २००.०० (ओडियो, विडियो कैसेट उपलब्ध है)

१७. ब्रह्मसूत्र (संस्कृत विद्यानन्दवृत्ति-परीक्षोपयोगी) डबल डिमाई साइज १६ पेजी पृष्ठ २४७ ... २५.००

१८. ब्रह्मसूत्र (शांकरभाष्य सटिप्पण-रत्नप्रभा ललिता व्याख्यायुतम्)
(भाग-१) ... ३००.००
(भाग-२) ... ५००.००

आई. एस. बी. एन. ८१-९००६२५-३-०

१९. ब्रह्मसूत्र (चतुःसूत्री, शांकरभाष्य सटिप्पण ललिता व्याख्यायुतम्) ... १००.००
आई. एस. बी. एन. ८१-९००६२५-०-६

२०. ब्रह्मसूत्र मूलपाठ ... १०.००

२१. वैयासिक न्यायमाला (संस्कृत, हिन्दी, टीकाद्वय सम्वलिता व्याख्यायुता) ... १५०-००

आई. एस. बी. एन. ८०-९००६२५-४-९

२२. वैयासिक न्यायमाला (सानुवाद ललिता व्याख्यायुता) ... १००.००

आई. एस. बी. एन. ८०-९००६२५-४-७

२३. श्रीमद्भगवद्गीता (शांकरभाष्य सटिप्पण आनन्दगिरि टीका ललिता व्याख्यायुतम्) ... ४००.००

आई. एस. बी. एन. ८१-९००६२५-१-४

२४. श्रीमद्भगवद्गीता (शांकरभाष्य ललिता व्याख्यायुतम्) ... २५०.००

आई. एस. बी. एन. ८१-९००६२५-२-२

२५. श्रीमद्भगवद्गीता (अष्टादशाह प्रवचन) ... २५०.००

(ओडियो-विडियो कैसेट उपलब्ध है)

२६. वेदान्त परिभाषा (अर्थदीपिका एवं सानुवाद सुबोधिनी व्याख्या) सजिल्द क्राउन साइज ८ पेजी ... ८०.००

२७. वेदान्त परिभाषा (परीक्षाब्धि-संतरणी) ... २०.००

२८. प्रत्यक्तत्त्व प्रदीपिका चित्सुखी-छात्रताषिणी टीका परीक्षाब्धिसंत-रणी अष्टोत्तरशतन्यायमालायुता) ... १२०.००

२९. प्रत्यक्तत्त्व प्रदीपिका (चित्सुखी) सटिप्पणटीकाद्वय संवलिता भाग १-२ ... १८०.००

३०. प्रत्यक्तत्त्व प्रदीपिका (चित्सुखी परीक्षाब्धि संतरणी) ... ४०.००

३१. चतुःसूत्री (भामती परीक्षाब्धि संतरणी) ... २०.००

३२. व्याप्तिपञ्चकम् (सानुवाद माथुरी छात्रतोषिणी संवलितम्) ... ४०.००

३३. सिद्धान्तलक्षणम् (जागदीशी छात्रतोषिणी हिन्दी व्याख्यात्रय संवलितम्।) ... यन्त्रस्थ

३४. संक्षेप शारीरकं (सानुवाद-मधुसूदनी सटिप्पणं संवलितं) (भाग-१-२) ... ५००.००

३५. संक्षेप शारीरकं (सानुवाद ललिता व्याख्यायुता) ... २००.००

३६. सागरसेतु सजिल्द क्राउन साइज पृष्ठ ३२० ... ५०.००

३७. कैलास आश्रम शताब्दी स्मारिका सजिल्द क्राउन साइज पृष्ठ ४३४ ... ५०.००

३८. यतीन्द्रतिलक सजिल्द क्राउन साइज पृष्ठ ३२४ ... ५०.००

३९. दिव्यस्मृति पृष्ठ ३८८ ... २०.००

४०. आचार संहिता ... ५०.००

आई. एस. बीत्र एन. ८१-९००६२५-६-५

४१. व्यासपूजापद्धति (शङ्खकलशप्रधान-वेदोमण्डलैःसमलङ्कृता) २०.००

४२. चित्राञ्जलिः १२५.००

४३. श्रद्धासुमनाञ्जलिः १५०.००

४४. अमृताञ्जलिः ५०.००

४५. श्रुतिसारसमुद्धरणम् (हिन्दी-टीकायुतम्) क्राउन १६ पेजी पृष्ठ १५२ २०.००

| | |
|---|---|
| ४६. तत्त्वबोध, आत्मबोध सानुवाद पृष्ठ १०० | २०.०० |
| ४७. वेदान्त रत्नाकर क्राउन १६ पेजी पृष्ठ ११६ | २०.०० |
| ४८. वेदान्त डिण्डिम घोष (सानुवाद) पृष्ठ ५८ | २०.०० |
| ४९. वैराग्यपञ्चक (कुञ्जिकाव्याख्या) | यन्त्रस्थ |
| ५०. अद्वैतमुक्तावली (मूल पञ्जाबी का संस्कृत श्लोकों एवं हिन्दी में अनुवाद) | २०.०० |
| ५१. अमर संस्मरण (श्री अमरनाथ यात्रा विवरण) | २०.०० |
| ५२. नित्यस्वर्णपुष्पोपहार | १२५.०० |
| ५३. चैतन्य वचनामृतं | ५०.०० |
| ५४. सानुवादगङ्गालहरी ... | १०.०० |
| ५५. हरिहरतारतम्यस्तोत्र सानुवाद ... | ५.०० |
| ५६. शिवताण्डवस्तोत्रं सानुवाद ... | ५.०० |
| ५७. मुक्ति सोपान ... | १०.०० |
| ५८. मानस सूक्ति सुधा ... | १०.०० |
| ५९. शिवमहिम्नः स्तोत्र सान्वय व्याख्या संहित ... | १०.०० |
| ६०. वैदिक दशशान्तिमन्त्र सानुवाद ... | ५.०० |
| ६१. संक्षेप शारीरक परीक्षाब्धि संतरणी ... | ४०.०० |
| ६२. अष्टोत्तरशतन्यायमाला ... | २०.०० |
| ६३. पाणिनीयाष्टाध्यायी ललिता टीका ... | १००.०० |
| ६४. शङ्कर वचनामृतम् सानुवाद ... | ५.०० |

**विशेष सूचना** — पुस्तक मँगाने वाले सज्जन अग्रिम राशि निम्नांकित कार्यालय में भेजकर मँगावें।
पुस्तक के मूल्यातिरिक्त डाक, रेलवे तथा पोस्टेज व्यय पृथक् लगेगा,
वी. पी. द्वारा पुस्तक भेजने का क्रम नहीं है।
ओडियो वीडियो कैसेटों के लिए प्रधान कार्यालय में सम्पर्क करें।

**मुख्य कार्यालय** — श्रीकैलास आश्रम ऋषिकेश (उ० प्र०)
पिनः २४९२०१ दूरभाषः (०१३५) ४३०५९८
कैलासविद्या प्रकाशन, श्री कैलास आश्रम, ऋषिकेश (उ० प्र०)

## षष्ठ कैलासपीठाधीश्वर विद्यावाचस्पति

# अनन्तश्री स्वामी विष्णुदेवानन्द गिरि जी महाराज

## (बड़े महाराज जी)



आपका जन्म धर्मप्रधान सौराष्ट्र प्रदेश के भावनगर मण्डलान्तर्गत तलगाजरडा निवासी वैष्णव परिवार में सन् १८८५ ई. में हुआ। माता पिता ने आपका विष्णु दास हरियाणी नाम रखा। आप बाल्यावस्था से ही विरक्त स्वभाव, धर्म एवं ईश्वर में पूर्ण निष्ठा रखने वाले थे। शिक्षा के लिए पिताजी और बड़े भ्राता श्रीत्रिभुवन दास हरियाणी जी की अनुमति से पहले बड़ौदा गये और वहाँ से भगवान् विश्वनाथ की नगरी काशी पहुँचे जहाँ नव्य व्याकरण, साहित्य तथा दर्शन विषयों को लेकर तीन बार सम्पूर्ण मध्यमा परीक्षा आपने उत्तीर्ण की। वेदान्त अध्ययन की अभिलाषा को लेकर आप ऋषिकेश कैलास आश्रम पहुँचे। तब से सदा-सदा के लिये आप कैलास आश्रम के ही हो गये। वहाँ लघु एवं बृहत् प्रस्थान त्रयी का गम्भीर अध्ययन आपने स्वामी गोविदानन्द गिरि जी महाराज एवं विद्यानिधि स्वामी प्रकाशानन्द पुरी जी महाराज से किया। दोनों गुरुजनों ने अपने जीवन के संजोये सम्पूर्ण विद्याधन का उत्तराधिकारी आपको ही बनाया। कैलास आश्रम के तत्कालीन पीठाचार्य श्री स्वामी जनार्दन गिरि जी महाराज के पवित्र कर कमलों द्वारा आपका संन्यास संस्कार सम्पन्न हुआ और तब से आप का नाम स्वामी विष्णुदेवानन्द गिरि जी पड़ा। आप अनुपम विद्वान् होने के साथ, कुशल कवि, संगीतज्ञ और समस्त दैवी गुणों के भण्डार थे। इच्छा न होते हुये भी गुरुदेव स्वामी गोविन्दानन्द गिरि जी महाराज की आज्ञा शिरोधार्य कर वि. सं. १९९५ में आपने कैलासपीठाधीश्वर के पद को स्वीकार किया।

कैलासपीठ पर आप १२ वर्षों तक विराजमान रहे। तत्पश्चात् स्वाभाविक उदासीनता एवं स्वास्थ्य की शिथिलता के कारण पदभार स्वामी निर्दोषानन्द गिरि जी को सौंप दिया और स्वयं जीवन मुक्ति का आनन्द लेते हुये उत्तर काशी में १२ वर्ष निवास किया। आप वै.कृ. ६ वि. सं. २०२९ को ब्रह्मलीन हो गये। आपकी जन्म शताब्दी १९८५-८६ ई. में वर्ष पर्यन्त बड़े धूम-धाम से मनाई गई जिसमें प्रगति के अनेकों कार्य सम्पन्न हुये। सन् १९९६ में अन्तर्राष्ट्रीय ख्याति प्राप्त आपके वंशज पौत्र (ज्येष्ठ भ्राता के पौत्र) विश्वसंत श्री मोरारी बापू ने कैलास आश्रम में आपके निर्वाण रजत महोत्सव के पावन प्रसंग पर "गुरुजन समाराधन श्री राम कथा" करके आपको अपनी श्रद्धासुमनाञ्जलि समर्पित की।

**देवानुग्रहत्रिदशकमहोत्सवप्रसङ्गे प्रकाशितम्**





## श्रीकैलासपीठाधीश्वर परमादर्श आ. म. मं.
## श्रीमत्स्वामी विद्यानन्द गिरि जी महाराज

आप का जन्म २९ नवम्बर, सन् १९२१ को जिला पटना (बिहार) के गाजी पुर ग्राम में हुआ। आपके पिता श्रीमान् जवाहर शर्मा जी और माता श्रीमती ललिता देवी थीं। आप बाल्यकाल से ही भगवान् की उपासना में रुचि रखते थे। २० वर्ष की आयु में आपने घर गृहस्थी को त्याग कर साधु जीवन अपनाया। आपके गुरुदेव परमहंस स्वामी विज्ञानानन्द गिरि जी महाराज एवं परमगुरुदेव योगीराज स्वामी नित्यानन्द गिरि जी महाराज से आपने परमार्थ पथ की दीक्षा ली। अपनी सारस्वत साधना में आपने काशी में वेदान्त-सर्वदर्शनाचार्य तक अध्ययन कर परीक्षा पास की। तत्पश्चात् आप अध्यापन कार्य में संलग्न हुए। दस वर्षों तक दिल्लीस्थ विश्वनाथ संस्कृत महाविद्यालय के प्रधानाचार्य रहे। वहीं पर निरञ्जनपीठाधीश्वर आचार्य म.मं. स्वामी नृसिंह गिरि जी महाराज एवं निरञ्जनपीठाधीश्वर आचार्य म.मं. स्वामी महेशानन्द गिरि जी महाराज की छत्रछाया में संन्यास दीक्षा ली।

२१ जुलाई सन् १९६९ को आप कैलास ब्रह्मविद्यापीठ ऋषिकेश के महामण्डलेश्वर पद पर आसीन हुये। आपके कार्यकलापों से तव विद्यमान कैलास आश्रम के दो पूर्वाचार्य म.मं. स्वामी विष्णुदेवानन्द गिरि जी महाराज एवं म.मं. स्वामी चैतन्य गिरि जी महाराज अत्यन्त संतुष्ट हुये। आपने ग्रन्थ रचना एवं प्रकाशन में विशेष रुचि ली और अनेकों ग्रन्थों का लोककल्याणार्थ प्रकाशन बड़े धैर्यपूर्वक करवाया। आप भारत के आध्यात्मिक एवं धार्मिक क्षेत्र के आचार्यों में अग्रगण्य हैं। साधु समाज की दृष्टि में आप की क्षमता, शक्ति, लगन, तत्परता, विद्वता तपश्चर्या सहिष्णुता एवं उदारता सभी गगन-चुम्बी और अलौकिक हैं। आध्यात्मिक संस्कृति के सर्वाङ्गीन विकास और जन जीवन को दिव्यालोक प्रदान करने में आपने युगपुरुष की भूमिका निभाई है।

१० दिसम्बर १९९६ को आपके पावन जीवन के ७५ वर्ष पूर्ण होने पर आपका अमृत महोत्सव सन्तों एवं भक्तों ने बड़ी धूमधाम से मनाया और आपके सुदीर्घ स्वस्थ जीवन की आशुतोष भगवान् शंकर से प्रार्थना की। आषाढ़ शु. ७ वि. सं. २०५५ से सवा वर्ष पर्यन्त कैलासाश्रम में आपके पीठासीन हुए तीस वर्ष होने के उपलक्ष्य में "देवानुग्रह त्रिदशक" महोत्सव मनाया जा रहा है।

**Price : Rs. 75.00**



ISBN 81-900625-9-x